# श्रीगंगास्तोत्रम् ॥



ஸ்ரீ கங்கா ஸ்தோத்ரம்

श्रीगंगोत्तरीक्षेत्रवास्तव्येन

पूज्यपादश्रीतपोवनस्वामिनासंप्रणीतम्

तच्च

वैद्यराजपण्डितश्रीवल्लभरामशर्मणा

प्राकाश्यंनीतम्

31

# श्रीगंगास्तोत्रम् ॥

श्रीगंगोत्तरीक्षेत्रवास्तव्येन
पूज्यपादश्रीतपोवनस्वामिनासंप्रणीतम्

तच्च
वैद्यराजपण्डितश्रीवल्लभरामशर्मणा
प्राकाश्यंनीतम्

# प्रस्तावना

## श्रीगंगायै जगज्जनन्यै नमः ।

अमलसलिलप्रवाहमात्ररूपागंगेतिहन्तहन्ताधिभूतसत्तामात्रवादिनो नास्तिकाः; स्वर्गसोपानपङ्क्तिः साकारा सुरुचिराकारा निखिलदिविषद्भिरुपास्यमानादेवी भगवतीभागीरथीगंगेत्यधि दैवपराउपासनाकाण्डीया भक्ताः; अथ च प्रत्यगभिन्नंसच्चिदानन्दंब्रह्मैवगंगेत्यध्यात्मनिष्ठा वेदान्तिनः । एवञ्च यदेतत्त्रैरूप्यं गंगायास्तत्रान्तिमनित्यशुद्धबुद्धमुक्तब्रह्मात्मभावेन सा स्तूयते विशेषतोऽस्मिन् स्तोत्रे । स्तोतव्यदेवताया दिव्यगुणगणमण्डितसच्चरितानुवर्णनं नाम यैषा स्तुतिकृत्पद्धतिर्नानुगता सा दृश्यते श्रीस्वामिचरणैः । परंतु गंगास्तोत्रमिषेण दुरवगाहाणां दार्शनिकसिद्धान्तानां सुष्टुसरलतया सम्यग्विचारः कृतः स्वतन्त्रया च रीत्या इति महनीयं महच्च वैलक्षण्यमस्यग्रन्थस्य । न खलु श्रद्धाजाडयेन स्तब्धीकृता श्रीस्वामिमहोदयानां स्वतन्त्राविचारसरणिरिति सुस्पष्टं प्रतिभाति तत्र तत्र तत्तत् पद्यपर्यालोचनेन ।

किञ्च खण्डदुग्धयोरिव भक्तिज्ञानयोः सुमधुरसम्मेलनेन सुललितपदविन्याससौष्ठवेन सुच्छन्दः सुशैलीसमायोगेन चातिकमनीयमलौकिकं किमपि महत्वमावहत्ययमुत्तमः स्तोत्रग्रन्थः । न चैतद्

विदितं विदुषां, यदेतादृशसुस्वादुस्तोत्रसंकलने कविकर्ममर्मज्ञानां स्वामिनां श्रीसौम्यकाशीशस्तोत्र बदरीशस्तोत्रादिप्रणेतृणां प्रावीण्य मभिरुचिश्च ।

अथचास्मिन् करालकाले प्रायशः पण्डितानां पाण्डित्यमुत्पथ मल्पतरेषु भौतिकेषु विषयेषु रममाणं दृश्यते । तथापि स्वामिपादाना मेतादृशमध्यात्मपथगमव्याहतमार्षज्ञानं तु चिराय बालगंगासमालिंगितहिमवन्मूर्द्धानमधिवसत्सु सततमन्वर्थनामसु तेषु तत्कृतानुग्रहफलमिति शक्यते संभावयितुम् । अहो खलु महांस्त्रिस्रोतसो हिमवतो भगवतश्च प्रपन्नजनपक्षपातः ।

तत्तादृशमिदमद्वितीयं स्तोत्ररत्नं बहुहायनेभ्यः पूर्वमाकलितं सहृदयानांहृदयाह्लादाय, पण्डितानां प्रमोदाय, भक्तानां भजनाय, बुभुत्सूनां बोधाय च प्राकाश्यं नीयते मया प्राप्तस्वामिनिदेशेन ।

अपिचास्य ग्रन्थस्य रचयितार उत्तराखण्डमण्डनायमाना महात्मानो ब्रह्मनिष्ठाः श्री तपोवनस्वामिनः सुविदितनामान इति न तान् तद्गुणान् वा वर्णयितुमत्र स्वयमारभे । तथापि कैश्चित् सुधीभिरन्तेवासिभिस्तेषां, सुगीतेषु तन्नुतिपरेषु श्लोकेषु मञ्जुलतरान् कतिचि दिह समुदाहृत्य, नमस्कृत्य, पुरस्कृत्य च तान् धन्यवादैस्त्वरयेदानीमुपरम्यते ।

"वशीकृतं येन मनोऽतिचञ्चल-
महर्निशं ब्रह्मपदानुचिन्तया ।
महत्तपो यस्य निजावबोधनं
तपोवनं ज्ञानिवरं नमामि तम् ॥ १ ॥

नमामि तस्यांध्रिसरोरुहं सदा
तमोनुदं शान्तिविधायकं हृदि ।
विवेकवैराग्यतपोमयी शुभा
विभातु मे तस्य मनोहराकृतिः ॥ २ ॥

ब्राह्मेण रूपेण विधूय योऽखिलं
मलं भ्रमोत्थं निजशिष्यबुद्धिषु ।
ददाति दिव्यं सहजं सुखं सुखी
तपोवनं तं प्रणमामि चेतसा ॥ ३ ॥

ज्ञानपूतं तपो यस्य कर्म चाकर्म चिन्तनम् ।
तपस्विने नमस्तस्मै ज्ञानगंभीरमूर्त्तये ॥ ४ ॥

तपोवनयतीन्द्राय तमोमोहविनाशिने ।
प्रेम्णा भक्त्या नमस्तस्मै चिदानन्दविहारिणे ॥ ५ ॥

यस्योपदेशवाक्येन संच्छिन्नः संशयो मम ।
आचार्यरूपिणे तस्मै नमस्तस्मै नमो नमः ॥ ६ ॥

चित्ते सुनिर्मलं ज्ञानं यथा स्थास्यति सर्वदा ।
विदधातु तथा सम्यग्भवन्तं प्रार्थये भृशम् ॥ ७ ॥

यथांबुवाहा जलवर्षणेन
छाया प्रतानेन महीरुहाश्च ।
हितं जानानां सततं चरन्ति
ज्ञानोपदेशेन तथा यतीन्द्रः ॥ ८ ॥

तपोवनं स्वामिवरं महान्तं
बद्धाञ्जलिस्तं प्रणमामि भक्त्या।
कृपाकटाक्षैस्तमसः स पारं
नीत्वेति शान्तिं विदधातु याचे ॥ ९ ॥

वन्दे गुरुं वंद्यपदारविन्दं
कुन्दारविन्दार्च्यपदैरमन्दम् ।
द्वन्द्वातिसंतप्तसुधांशुरश्मिं
द्वन्द्वेतरज्योतिरुरु प्रतिष्टम् ॥ १० ॥

भारती तु चकिता मधुरेण
सारगर्भवचसापरिशुद्धम् ।
यत्पदं रहसि गायति नित्यं
श्रीतपोवनयतिं तमुपासे ॥ ११ ॥

भक्तितश्च भजते हृदि नित्यं
सद्‌गणो विगतमानमदादिः ।
यत् पदं स्वपद मोक्षपदाप्त्यै
श्रीतपोवनयतिं तमुपासे ॥ १२ ॥

शैलशृंगभुवमद्‌भुतवृत्ति-
र्ह्यावसन्नपि विशुद्धविचारात् ।
भावुकं भुवि तनोति महान् यः
श्रीतपोवनयतिं तमुपासे ॥ १३ ॥

यश्चरस्थिरवितान तनुः सन्
व्याप्य तिष्ठति चतुर्दश लोकान् ।
नित्य निर्वृति निरामय मूर्ति
तं नमामि वननाम यतीन्द्रम् ॥ १४ ॥

शास्त्रबोधजलधिं सुगुणाना-
माकरञ्च करुणाकरमार्यम् ।
ब्रह्मविद्वरतमं गुरुवर्यं
भावये सतत मक्षयभक्त्या ॥ १५ ॥

ब्रह्मवृत्तिरबहिर्मुखवृत्ति–
स्त्यागवार्द्धिरतितीव्रविरक्तिः ।
मस्करीन्द्रमणिमस्तकभूषा
द्योतते खलु हिमाद्रिविभूषा ॥ १६ ॥

विद्यायशोवसुपिता जननी च बन्धु-
र्ज्ञानञ्च निर्वृतिरपीह गुरुर्गुरु वै ।
श्रेयः समस्तमपि सद्गुरुपादधूलि-
र्वन्दे गुरुं गुरुतरुप्रतिमं सुराणाम् ॥ १७ ॥

शंकरांघ्रियुगनिश्चलभक्तः
शंकरः स्वयमपि स्वमहिम्ना ।
शंकरोतु करुणामृतधारां
किंकरे मयि करोतु यतीन्द्रः ॥ १८ ॥

अपाङ्गैरुत्तुङ्गैरमृतझरभङ्गैः परगुरो !
शुचादूनं दीनं कलय दययामामविमृशन् ।
गुणं वा दोषं वा मम किमपि संचिन्तय सिचे-
त्तदा कैव श्लाघा निरवधि कृपानीरधिरिति ॥ १९ ॥

स्यात्ते दीनदयालुता कृतयशोराशिस्त्रिलोकीगुरो !
तूर्णं चेद्दयसे ममाद्यनतथा कारुण्यतः श्रीमति ।
वर्षन् भूरि मरुस्थलीषु जलभृत् सद्भिर्यथा कीर्त्यते
नैवं वर्षशतं पयोनिधि जले वर्षन्नपि स्तूयते ॥ २० ॥

यद्वाचकत्वादोंकारः स्तूयते वेदमस्तकैः ।
तं वन्दे परमात्मानं वननामभृतं परम् " ॥ २१ ॥

अहमदाबाद
२३-१-१९४०

इति भवदनुचरः
पं. वल्लभराम शर्मा
( वैद्यराजः )

# श्री गंगास्तोत्रम्।

---

## प्रथमः स्तबकः

---

जय जय जगदंब ! श्रीगल श्रीजटायां
जय जय जयशीले ! जह्नुकन्ये ! नमस्ते ।
जय जय जलशायी श्रीमदंघ्रिप्रसूते !
जय जय जय भव्ये ! देवि ! भूयो नमस्ते ॥ १ ॥

त्रिपथ पथिक पाथः स्रोतसा सिद्धिमूर्त्ति-
र्दिनकर कुलभूषारत्न यत्नोदयोत्था ।
प्रणतजन सुरद्रुः पावनी पावनानां
जयति जगति गङ्गा भाग्यपूगो जनानाम् ॥ २ ॥

गङ्गे ! मातरनुस्मरामि सततं त्वन्मूर्ति मत्यद्भुतां
दैवीं दैवतदुर्लभां यमुनया वाचाऽन्नसंपूर्णया ।
भक्तेनाथ भगीरथेन भगवत्पादैश्च पादार्चकै
र्या नित्यं समुपाश्रिता विजयते गङ्गोत्तरी सद्मनि ॥ ३ ॥

तुहिन शिखरिशृंगे दिव्यसौभाग्यसंप-
न्महिमनि विहरन्तीं पुष्पवासे विशाले ।
सुकृति समधिगम्ये सम्यगालीजनाली-
विलसितमलसाक्षीं नौमि गंगामभीक्ष्णम् ॥ ४ ॥

पादांगुष्ठा द्घोदिता देवि ! विष्णो-
र्गंगोत्तर्यां गोमुखी मस्तकाद्वा ।
गंगा गंगैवास्य बाधो न किञ्चित्
सर्वेशित्री सर्वथा हि त्व मंब ! ॥ ५ ॥

अयि भगवति ! भव्य श्रीमुख श्रीनितंबे
तुहिन मुकुरहर्म्यस्यान्तरन्तर्वधूवत् ।
अहह ! चरसि चित्तं त्वंतु माता जगत्या-
स्तदपि कथमसूर्यं पश्यतां यासि सह्रीः ॥ ६ ॥

पापै र्मुखं समभवत् खलु नीलनीलं
यस्यांब ! तस्य तव वेश्म निरीक्षणेन ।
श्रीमन्मुखं भवति भास्कर भासि नूत्नं
मन्येऽर्थवत्तत इदं तव वेश्मनाम ॥ ७ ॥

प्रसीद भगवत्यंब ! प्रसीद करुणांबुधे ! ।
पुनीहि स्वात्मतुल्यंमे मनो मलमलीमसम् ॥ ८ ॥
मलिनं मलिनं चित्त मत्यन्त मलिनं शुभे ! ।
कुतो न कुरुषे दृष्टिं मयि सर्व मलापहाम् ॥ ९ ॥

चित्तं विशोधय बहिर्विषयाभिषक्त-
मन्तर्निरुन्धि भवदंघ्रिसरोज युग्मे ।
यावद्बहिर्निश्चरति बाह्यविलोकिनी हृ-
त्तावत् कथं जननि ! सौख्यकथा नराणाम् ॥ १० ॥

मातर्जाह्नवि ! निह्नवे तु जगतः
पृथ्व्यादि मिथ्यात्मनो
यत्तत्वं न निषिद्ध्यते तदचलं
त्वन्मात्र मेकाकिनी ।
यस्मात्त्वं सदशेषमूल ममलं
ब्रह्मैव निर्धर्मकं

मन्देभ्यः खलु कल्पिता जलमयीं
मूर्तिस्तवान्याचया ॥ ११ ॥

अच्छिन्नरूपिणी देवी नित्या या मृत्यु मत्यगात् ।
प्राणिति प्राणहीनाच जाह्नवी साऽस्तु मे गतिः ॥ १२ ॥

सर्वदा सर्वदृग्देवी सर्वकर्त्री च या स्वयम् ।
सर्वभावैः प्रपद्ये तां जाह्नवीं सुरनिम्नगाम् ॥ १३ ॥

पश्यन्तु केचिदमलं जलमेव गंगे-
त्यन्ये वयं तु भवयन्त्रविमुक्तिहेतुः
श्रीमूलशक्ति रखिलेश्वरूपरूपि-
ण्यानन्द कन्दमिति नित्यमुपास्महेत्वाम् ॥ १४ ॥

श्रद्धैव मूलं त्वदुपासनाया
जलेऽपि देवत्व विधान दक्षा ।
श्रद्धां विना कः परलोक चिन्ता-
मग्नः प्रवर्तेत परोक्षकार्ये ॥ १५ ॥

प्राग्जन्मपुण्य निचयेन तवांघ्रिपद्मे
श्रद्धा भवेत् स्थिरतराऽथच भक्तिभावः ।
भक्त्याच भावुकनिधे ! पुरुषार्थसिद्धिः
श्रद्धोज्झितः स्वयमपुच्छपशुर्धण्याम् ॥ १६ ॥

प्रफुल्लनीलोत्पल कान्तिचोरैः
कटाक्षपातै स्तव पावितो यः ।
निरन्तशान्तिः समुदेति पुंस-
स्तस्यैव भागीरथि ! भाग्यभाजः ॥ १७ ॥

किं वा मुंण्डनतः किमस्ति जटया
वैवर्ण्य वस्त्रेण किं
किं वा वस्त्र विसर्जनेन भसिता-
लेपेन जापेन किम् ।

भिक्षान्नाशनतश्च किं व्रतशतै-
स्तीर्थेषु चाटाट्यया
विश्वाधीश्वरि ! युष्मदंघ्रियुगले
भक्तिर्न चेन्निश्चला ! ॥ १८ ॥

गुहाच्छिद्रे वाद्रेः शिखरभुवि वा घोरगहने
श्मशाने वैकाकी वसतु वसतौ वा निजजनैः ।
महाभागे ! भागीरथि ! तवपदांभोजभजन-
प्रमत्तचित्तश्चेत् सतु परमयोगी सतु सुखी ॥ १९ ॥

यद्वा योगी जाह्नवि ! कर्मी तव भक्तो
यद्वा ज्ञानी त्वद्रतिरन्तर्यदिनो चेत् ।
अव्यावृत्ता तर्ह्यपि योगादि महार्हं
मन्ये मोघं मोघ मशेषं खलु तेषाम् ॥ ३० ॥

युष्मत्पदाब्जरतिरेव शिवे ! विशुद्धं
वैरत्तय मन्यदखिलं खलुमोहसिद्धम् ।
को वा सुधीस्तमभिवाञ्छति काष्टभावं
यं ह्रा वितृष्णपदवीति विदन्ति मुर्खाः ॥ २१ ॥

वैराग्यं यदिहापरत्र विषये-
ष्विच्छाक्षय स्तर्ह्यमी
बालोन्मत्तजडादयोऽपि सुतरां
वैतृष्ण्यसीमाजुषः ।
हे देवि ! त्वददभ्रशुभ्रवपुरा-
पूर्णं सदा पश्यतो
योपेक्षामति रन्यवस्तुषु दृढा
वैरत्तय मेतन्मतम् ॥ २२ ॥

शान्तिः कथं विषयलेश मसंस्पृशन्ती
चित्तं न चेत्त्वयि निपक्त मखण्डमूर्त्तौ ।
ज्ञानाब्धिके ! जननि ! जह्नुसुते ! निसर्ग-
सिद्धः सदैव मननं मनसो हि धर्मः ॥ २३ ॥
युष्मत्स्वरूपसुखसागरममग्नबुद्धेः
शाम्येत् स्वतोऽक्षकुल मुद्भट मेषदान्तिः ।
दुःखस्य कस्यचिदतोऽस्फुरणं तितिक्षा
न्यग्रोधभूर्जसमधर्मदशा त्वविद्या ॥ २४ ॥
तथा च मातर्भवदीयतत्व-
क्रीडापरस्यान्यकृते निवृत्तिः ।
ज्ञेयः स नित्योपरमो नयाज्ञा
वारण्यवासोऽलसता निधीनाम् ॥ २५ ॥

इति प्रथमः स्तबकः समाप्तः ।

***

## द्वितीयः स्तबकः

---

मातर्मयि ! नमस्तुभ्यमुद्धरैनं भवांबुधेः ।
शक्तिः शक्तात्पृथङ्नास्ती तीश्वरो हि त्वमीश्वरी ॥ १ ॥

फलमतउपपत्तेर्न्यायितोऽस्मादकस्मात्
फलमिह सुकृतानां दुष्कृतानाञ्च न स्यात् ।
फलति फल विधात्र्या ब्रह्ममूर्त्या भवत्याः
प्रतनु ! करुणयैव प्राणिनां कर्मजातम् ॥ २ ॥

बोधश्च मोहविपिनोत्तरणैकपद्या
न प्राप्यते भवदनुग्रह मन्तरेण ।
देवि ! त्वमेव विदधासि विमुक्तिहेतुं
बोधं यथाऽन्धतमसं खलुबन्ध हेतुम् ॥ ३ ॥

हे देवि ! धर्मिप्रतियोगिरूपा-
च्छिन्नत्वतः सिद्ध्यति नो पृथक्त्वम् ।
परस्परालंबतयाऽत्र युष्मत्-
कृपां विना कस्य भवेत् प्रतिष्ठा ॥ ४ ॥

घटो न वै सिद्ध्यति तद्धियं विना
विना घटं धीरपि तस्य नो दियात् ।
इतिद्वयश्चेत् प्रतिषिद्ध्यते भवत्-
पदैकभक्तस्य भवेत्तदात्मता ॥ ५ ॥

सतोऽसतश्चापि विलक्षणं यत्
सत्वात्मकं जागतबीज माहुः ।

अज्ञान मस्मिस्तव संप्रसादा-
च्छ्रद्धा भवेदव्यभिचारिणी नुः ॥ ६ ॥

सैषा चैत्रप्रमितिरूदिता तत्प्रमाप्रागभावो-
द्रिक्तानादिप्रणशनकरी मैत्रमावत् प्रमात्वात् ।
त्वद्वाह्यस्य प्रियतनु ! महाविद्ययाऽज्ञानसिद्धि-
र्यद्वद्वीणावदन मफलाऽश्रोत्रवच्छोत्रमूले ॥ ७ ॥

सत्यासत्यानधिकरणता ज्ञानबाध्यत्व मेवं
स्वाधिष्ठानस्थित दृढनिषेध प्रतिद्वन्द्विता वा ।
मिथ्यात्वञ्चे द्रुहुतरमहोलक्ष्यते लक्ष्यविद्धि-
र्मिथ्या नस्या जगदिदमनेना प्रियेभ्यस्तवांब ! ॥८॥

येऽर्थाः प्रोक्ता जननि ! मुनिना मानमेयादिसंज्ञा-
स्तन्त्रेऽन्यस्मिन्निपुणधिषणैः षोडशानां च तेषाम् ।
नैरुक्त्यञ्चेन्निरुपमगिरा खण्ड्यते खण्डकारैः
सत्यत्वं किं त्यजतिभुवनं त्वत्पदाद्बाह्यबुद्धेः ॥ ९ ॥

कः स्वप्रकाशः स्वश्चासौ प्रकाशश्चेति वा स्वयम् ।
स्वस्य प्रकाश इत्थं वा न भवेदन्यथापि वा ॥ १० ॥

अवेद्यत्वेऽपरोक्षत्वं स्वप्रभत्वमिति स्थितिः ।
प्रावोचच्चित्सुखार्यश्चेदन्येऽप्येवं मुनीश्वराः ॥ ११ ॥

स्वप्रकाशतनो ! स्वात्मा स्वप्रकाशः कथं स्फुरेत् ।
तस्ययस्य मनोऽरक्तं त्वत्पादसरसी रुहे ॥ १२ ॥

ब्रह्म सत्यंजगन्मिथ्या जीवो ब्रह्मेति केवलम् ।
भाष्य कृद्भाष्यसंदर्भैरभ्यधाच्छंकरो गुरुः ॥ १३ ॥

तथाऽपीशित्रि ! को जन्तुर्विद्यामूर्त्तेस्तवानघे !।
शक्तिपातं विनाविद्याद्ब्रह्मैवाहमिति स्फुटम् ॥ १४ ॥

वागारभ्या विकृतिरखिला मृत्तिकेत्येव सत्यं
श्रुत्वाप्येवं श्रुतिगिरमथ श्रावयित्वापि शिष्यान् ।
को वा प्राज्ञः प्रभवति भुवि त्यक्तुमिष्टान् स्वभोगान्
रन्तुञ्चाव ! त्वदमलपदे त्वत्कृपाविप्रकृष्टः ॥ १५ ॥

न मेधया शास्त्रवादवैखर्या च वरानने ! ।
त्वत्कृपामृतसेकेन भवतापः प्रशाम्यति ॥ १६ ॥
गंगे ! गंगे ! नमस्तुभ्यं मातर्मात र्नमोमनः ।
कृपयादेहि मे नित्यं त्वयि निष्ठामखण्डिताम् ॥ १७ ॥

आचार्यनाम निगदन्त्यभिमान युक्ता
युद्धयन्ति च स्वमतनैगमता प्रसिद्धै ।
नाचार्यचोदित विधिं त्वनुयन्ति लोका-
स्त्वन्निष्ठता हि निखिलार्यमतैकधर्मः ॥ १८ ॥

मुण्डित्व दण्डित्व जटित्व वेषै-
राचार्यपारंपरिकत्वतश्च ।
पिचण्डपूर्तिः फलमंव ! नान्यत्
पुमर्थहेतु स्त्वदनन्य भक्तिः ॥ १९ ॥

त्वत्तत्त्वनिर्णयविधौ सहकारि पूर्वा-
चार्यैः प्रभाषितमुपि स्वमति प्रयोगः ।
प्राधान्यमेति न हि विन्दति मेषवृत्ति-
र्ब्रह्मात्मिकेंव ! तव तत्वमनर्थ मृच्छेत् ॥ २० ॥

कपिलोयदि सर्वज्ञः कणादो नेतिकाप्रमा ।
इति प्रेक्षापरेत्येष भणत्याभाणकः स्फुटम् ॥ २१ ॥
श्रुतिः प्रमाणं प्रमितौ तवेत्यृषि-
र्जगादवाढं किल बादरायणः ।
तथापि भागीरथि ! तीक्ष्णबुद्धय-
स्तदर्थ मर्थादधिगन्तु मीशते ॥ २२ ॥

धियः प्रकर्षोऽथ विचारशुद्धि-
भवत्स्वरूपावगतिश्च नूनम् ।
भवे ! भवप्रेष्ठतमे ! भवत्या
भवत्यभीक्ष्णं कृपयैव पुंसाम् ॥ २३ ॥

नानामतै र्न्यायविशेष युक्तै-
र्विवर्द्धिते ह्यास्तिकनास्तिकैश्च ।
कः शब्दजालेन विमुह्यति श्री-
पदारविन्दाननुषक्तवृत्तिः ॥ २४ ॥

पदांबुजं ते शरणं ममांब !
प्रसीद नान्यच्छरणं प्रपद्ये ।
त्वत्पादभक्ति र्गतिरित्यनन्या
मन्ये मनोऽतीत भवत्पदाप्त्यै ॥ २५ ॥

इति द्वितीयः स्तबकः समाप्तः ।

* * *

# तृतीयः स्तबकः

---

सच्चिन्मूर्तेर्यत्तवास्तितत्व मस्मिन्
संदिग्धेयः स्वस्य हन्तास्तितायाम् ।
संदिग्धे स व्याहतज्ञप्तिरंब !
स्वात्माहित्वं तस्थुषोऽतस्थुषश्च ॥ १ ॥

स नाहमस्मीति निषेधति स्वं
यः श्रीपकन्ये ! प्रतिषेधति त्वाम् ।
स्वस्य स्वयं वै न भवेन्निषेद्धा
तस्मात् कथं देवि ! निरस्यसे त्वम् ॥ २ ॥

सत्तास्वरूपेण समन्ततस्त्वं
विभ्राजसेंऽब स्वमहिम्नि नित्यम् ।
सत्तातिरिक्तं तव नास्ति सत्ता
सत्वस्य कस्यापि घटादिकस्य ॥ ३ ॥

त्वत्सत्व मार्ये ! निगदत्यभीक्ष्णं
बुद्धिः सतां शुद्ध विचारदक्षा ।
स्वतः प्रमाणं श्रुतिरप्य मन्द—
स्वरेण गायत्यखिलेश्वरि ! त्वाम् ॥ ४ ॥

दृष्ट्वेममद्भुततरं प्रकृति प्रपञ्चं
कोवा विचक्षणमतिः खलु तद्विधात्रीम् ।
त्वामंब ! सम्यगनुमातु मनीश्वरः स्यात्
कार्यं हि न क्वचिदकारण मस्ति दृष्टम् ॥ ५ ॥

जल्पन्तु शून्यमतयस्तव शून्यभावं
निन्दन्तु चाधिकमधीरिति वञ्चितोऽयम् ।
सच्चिद्घने ! तव पदांबुज भक्तिशीलान्
भक्तास्तथापि न भवद्विमुखा भवेयुः ॥ ६ ॥

आत्मैव त्वं हि भक्तानामसित्वं शून्यताकथम् ।
असि चेत्त्वयि वैरस्यं कथं नित्य सुखोदधौ ॥ ७ ॥
नास्तीति भवती केन साध्यते सिद्धरूपिणी ।
तथा च सर्वशासित्री ह्यस्ति चेन्नास्तिको हतः ॥ ८ ॥

त्वच्छक्ति माहात्म्यमहस्करोद्यत्-
प्रभावदंब ! प्रसृतं प्रसिद्धम् ।
तथाऽपि सत्वं तव शंक्यते यै—
र्नमोऽस्तु तेषां धिषणोदयाय ॥ ९ ॥
इन्द्रार्क चन्द्रार्क सुताग्निवायु-
प्राग्र्या महैश्वर्ययुता अपी मे ।
देवाः कथं नोपरता भवन्ति
स्वस्वक्रियाभ्यः सुविचार्य मेतत् ॥ १० ॥

अहो नियन्त्र्यास्तव शासनेन
जगत् सचन्द्रार्क मिदं यथावत् ।
प्रवर्तते नातिगमः कदाचि—
न्नोचेदमर्यादमिदं विनश्येत् ॥ ११ ॥
एवञ्च सत्वं तव चेश्वरत्वं
यदि प्रसिद्ध्यत्यविशंक मंब ! ।
सेवा नियन्त्र्या स्तव मुख्यधर्मो
नियम्यजन्तोरिति किं नियम्यम् ॥ १२ ॥

साकारचिन्ताऽथ निराकृते र्वा
चिन्ता विधेयेति वृथा विवादः ।

चिन्त्यस्वरूपाग्रहतो हि कार्य-
श्चिन्ता स्वरूपे खलु चित्तबन्धः ॥ १३ ॥
स्फुटापरोक्षं तव भक्त चेतः
सर्वं हि संपश्यसि सर्वदृक्त्वम् ।
तथाच भक्तेस्तव नाकृतीनां
वैशिष्ट्य मीशित्रि ! निरीक्षसेत्वम् ॥ १४ ॥
त्वत्तत्व याथात्म्य विनिर्णयात्म-
न्यहो महादुष्करकर्मणि स्यात् ।
को वा समर्थः स्खलितेऽपि दोषः
को वा यदि त्वद्रतिरप्रकंपा ॥ १६ ॥
आकारभेदेषु निराकृतौ वा
निष्ठैव कार्या दृढमन्यवर्जम् ।
निष्ठा सवित्री ननु रूपभेदः
फलस्य यस्मात्तव विश्वमूर्ते ! ॥ १६ ॥
मिथ्याऽथ सद्वेति जगद्दिनानि
विवादतो हन्त नयन्ति लोकाः ।
मिथ्यात्व सत्यत्व विचारणेन
किं वा पिपासोस्तव भक्तिपेयम् ॥ १७ ॥
यथा तथैवास्तु न काकदन्त-
परीक्षणव्यग्रतयाऽस्ति किञ्चित् ।
परात् परे ! त्वत्पदपद्म सेवा-
रतिः स्वयं मुक्तिपदैक हेतुः ॥ १८ ॥
को वा विजानाति विशेषतस्त्वत्-
स्वरूपयाथात्म्य मबुद्धिगम्यम् ।
त्वत्सृष्टि माहात्म्य मपीश्वरि ! स्वां
स्वप्रक्रियां च स्वयमेव वेत्सि ॥ १९ ॥

को वेद कोवा वदतीह सम्य-
गियं विसृष्टिर्यत आवभूव ।
अहो महादुर्गममंब ! युष्मद्- त्
सतत्व मित्यार्षनिरूक्ति रेषा ॥ २० ॥

स्वयमेवात्मनात्मानं वेत्थत्वं वेदरूपिणि ! ।
त्वमेवादि र्हि भूतानां त्वां वेत्तीतीतरः कथम् ॥ २१ ॥

तथापि यत्किञ्चिदवेत्य शब्दतः
संस्कारतो देवि ! विचारतस्तथा ।
त्वत्तत्व मुन्निद्रमुपासते तु ये
कृतार्थयन्त्येव त आत्मसंभवम् ॥ २२ ॥

न कामयेऽन्यं पुरुषार्थमीश्वरि !
त्वत्पादभक्तेर्वहुशास्त्रकानने ।
घूर्णे किमभ्यर्ण मसित्व मित्यहं
यच्छद्धेंऽघ्री तवयामि चाश्रयम् ॥ २३ ॥

प्रदेहि भक्ति त्वयि नित्य निश्चला-
मानन्दरूपा मविकल्पसंगिनीम् ।
अध्यात्म साम्राज्यपदं त्वदात्मिका-
महो किमेतै र्वहुदर्शनश्रमैः ॥ २४ ॥

नासित्वमित्यपवदन्तु ह नास्तिका स्त्वां
नास्त्यर्क इत्यपवदन्ति यथा दिवांधाः ।
विश्वेश्वरि ! त्वमसि नित्यमिति प्रपश्यन्
संक्रीडते तु सततं त्वयि मानुषोऽयम् ॥ २५ ॥

इति तृतीयः स्तबकः समाप्तः ।

* * *

# चतुर्थः स्तबकः

---

ब्रह्मात्मिके ! जननि ! सत्यसुखस्वरूपे !
त्वत्तत्त्वचिन्तनविधौ कथयन्ति केचित् ।
सर्वक्रियोपरमणं सहकारि मुख्यं
संन्यासशब्दित मितीश्वरि ! विश्ववन्द्याः ॥ १ ॥

यथा यति र्न्यस्तसमस्तकर्मा
तथा गृही कर्मपरोऽपि नूनम् ।
सदाधिकारी तव चिन्तनेऽव !
त्वत् सेवनं कस्य न कस्य हेतुः ॥ २ ॥

त्वच्चिन्तनं देवि ! मनोविशुद्ध्या
न कर्मणा कर्मविसर्गतो वा ।
संपद्यतेऽतः सकलो मुमुक्षुः
शुद्धः स्वयं तत्वविवेचनार्हः ॥ ३ ॥

श्रीयाज्ञवल्क्यो जनक स्तथान्ये
चोद्दालकाद्याः खलु तत्वनिष्ठाः ।
सर्वेऽपि गार्हस्थ्यपरा अभूवन्
किं वा गृहस्थेन तवापराद्धम् ॥ ४ ॥

सर्वाश्रमी तद्वदशेषवर्णी
सर्वो जनश्चेश्वरि ! निर्विशेषम् ।
अध्यात्मनिष्ठा मधिगन्तुमीश-
स्त्वद्रूपिणीं त्वद्भजनैक मूलाम् ॥ ५ ॥

विश्वैकनाथे ! महिलात्मिकात्वं
विद्या मविद्याञ्च ददासि लोके ।
तत्तत् स्पृहेभ्योऽव तथापि केचित्
स्त्रियो न विद्येति ह संगिरन्ते ॥ ६ ॥

गङ्गे ! भवत्पूतविशालधारा
भावत्कविद्येति मम प्रभाति ।
गृह्णन्तु सर्वेऽपि यथेच्छ मेतां
छिन्दन्तु तृष्णां त्वयि कस्य रोधः ॥ ७ ॥

सत्यं न कस्यापि धनं स्वकीयं
तथाच तद्ग्राहक मार्षवाक्यम् ।
तर्हि क पात्राधिकृते विवाद-
प्रसंग इत्यल्पमति र्न वेत्ति ॥ ८ ॥

सत्यस्वरूपे ! त्वमतस्तथा त्व-
द्याथात्म्य माहात्म्य निवेदिका गीः ।
सूर्यप्रभावत् स्वचिरन्तन स्वं
सर्वस्य नैवान्यतमस्य देवि ! ॥ ९ ॥

श्रद्धाजडाः किमपि कार्य मचिन्तयन्तः
सद्धाथ दुष्टमिति हा ! स्व विचारहीनाः ।
क्षारोदकं प्रहिरयं खलु पूर्वखातोऽस्ती
त्याग्रहाग्रहधियो हि पिबन्ति सर्वे ॥ १० ॥

आनन्द सुन्दरतनो स्तव जह्नुकन्ये !
संप्राप्तिरत्र महिलाऽथ च देवसंपत् ।
साह्र्यञ्च साधनमिदं द्वयमेव नान्य-
न्मन्ये सनातन सुधर्म इति प्रमुख्यः ॥ ११ ॥

सर्वेषु देशसमयेषु च सन्नयेषु
सत्पुंसु चैकरस मव्यभिचारि यस्मात् ।

तस्मात् स्थिरं ह्यपरिवर्ति च मुख्य एत-
द्धर्मः सनातन इतोऽन्यदमुख्यधर्मः ॥ १२ ॥
त्वत् प्राप्तिरेव परमे ! परमः पुमर्थो
ह्यालक्ष्य लक्ष्यमिद मत्र करोतिकर्म।
यत् काल देशसदृशं सतु शुद्धधर्म-
स्तद्वां स्ततस्तव सनातन शुद्धधर्मौ ॥ १३ ॥

मातर्महेशित्रि ! निवृत्तिमन्त-
र्दैवी तु या दुर्लभदिव्यसंपत् ।
महामहिम्नीं ममदेहि घोर-
भवादवांग्रौ प्रलपन्त मेनम् ॥ १४ ॥

अन्तर्निवृत्तिं नितरा मविन्द-
न्नाप्नोति बाह्योपरमेण यस्त्वाम् ।
संन्यासनाम्ना बत हस्तिराजं
बध्नाति मत्तं बिसतन्तुना सः ॥ १५ ॥

त्वत्तत्वबोधादिशमादिनाना-
गुणौघ संपद्विधुरस्य पुंसः ।
बाह्योपरामो यदनर्थहेतुर्-
गर्ह्यातिगर्ह्यः स विगर्हते त्वाम् ॥ १६ ॥

योगोद्युक्तो भीमवाञ्छावियुक्तो
नान्यासक्तः संततामोदशाली ।
युष्मद्वृत्ति र्योऽविजातीयवृत्तिः
संन्यासः स्याद्भूषणं तस्य पुंसः ॥ १७ ॥

द्रव्यार्थं न त्यज्यते द्रव्यजातं
योषार्थं वा त्यज्यते नैव योषित् ।
कर्मार्थं न त्यज्यते कर्म युष्मत्-
स्वाराज्यार्थं त्यज्यते सर्वमेतत् ॥ १८ ॥

तत्त्वासक्तिस्तत्त्वचिन्तानितान्तं
तत्त्वक्रीडातत्त्वविद्याप्रचारः ।
शिष्टाचारश्चांब धर्मोयतीनां
नेषत्तेषांद्वेषरागप्रवृत्तिः ॥ ॥ १९ ॥

गार्हस्थ्येपि ज्ञानविचारस्य च भक्ते-
र्नासंभूतिः कर्मपरे तर्हि किमर्थम् ।
तत्त्यागोंऽब ! श्रीपदभक्त्या हि विमुक्ति-
र्न स्याद्वेषैस्तीर्थमुखैर्वा यतिपट्टैः ॥ २० ॥

कर्मीधन्यः श्लाघनीयोऽतिधन्यः
कर्मत्यागो नैवकार्यः कदाचित्
मोक्षो न स्यात् कर्मठस्येति वादो
नादर्तव्यः शास्त्रतर्कादिबाह्यः ॥ २१ ॥

मुण्डित्वेन भ्रष्टतां प्राप्य मूढाः
स्वस्यान्येषाञ्चपदप्यर्थशून्याः ।
जीवन्तीमे काकतश्चातिगर्ह्या
नूनं भूमे हन्त भारायमाणाः ॥ २२ ॥

दैवी संपद्या हि निवृत्तिः खलु मुख्या
प्राप्या मर्त्यैराश्रमतृष्णा नतु कार्या ।
सर्वं साक्षात् प्रश्यसि चित्तं हि शिवेत्वं
सर्वधात्री सर्वमनः पीठनिवासा ॥ २३ ॥

संन्यस्यन् बा काष्ठतपस्या मुतकुर्वन्
श्रद्धा भक्त्यो वैं तव नामाप्यविजानन् ।
भद्रं भद्रे ! प्राप्स्यति चेत्तर्हिकथंनो
भूरुड्ंकाश्चापि भविष्यन्ति सुभद्राः ॥ २४ ॥

वन्दे वन्दे त्वत् पदपंकेरुहयुग्मं
याचे याचेऽहं तव कारुण्यकटाक्षम् ।
मन्ये धन्ये ! जाह्नवि ! धर्मध्वजिमुद्रे-
त्येनं न्यासं निश्चलभक्ति स्त्वयि नो चेत् ॥ २५ ॥

इति चतुर्थः स्तबकः समाप्तः ।

* * *

## पञ्चमः स्तबकः

---

यादेवि ब्रह्मरूपेण ब्रह्मवादिषु संस्थिता ।
असंस्थिता च गंगायै नमस्तस्यै नमो नमः ॥ १ ॥

या देवी विष्णुरूपेण विष्णुवादिषु संस्थिता ।
असंस्थिता च गंगायै नमस्तस्यै नमो नमः ॥ २ ॥

या देवी शिवरूपेण शिववादिषु संस्थिता ।
असंस्थिता च गंगायै नमस्तस्यै नमो नमः ॥ ३ ॥

रामः कृष्णो गजास्यस्त्रिपुररिपु सुतः
षण्मुखोऽहस्करश्च
ब्रह्मा ब्राह्मीति युष्मद्भजन पथजुषां
भावना भावितेन ।
नाना देवात्मना वै जननि !
विजयसे विश्वमूर्त्तिस्त्वमेव
कारुण्यं तेऽत्र हेतु र्निरवधि-
करुणावारिधेः स्वाश्रितेषु ॥ ५ ॥

या देवी कर्मरूपेण कर्मवादिषु संस्थिता ।
असंस्थिता च गंगायै नमस्तस्यै नमो नमः ॥ ६ ॥

यादेवी शून्यरूपेण भूतवादिषु संस्थिता ।
असंस्थिता च गंगायै नमस्तस्यै नमो नमः ॥ ७ ॥

यादेवी भूतरूपेण भूतवादिषु संस्थिता ।
असंस्थिता च गंगायै नमस्तस्यै नमो नमः ॥ ८ ॥

यादेवी सर्वरूपेण सर्ववादिषु संस्थिता।
असंस्थिता च गंगायै नमस्तस्यै नमो नमः ॥ ९ ॥

यस्यां जन्मास्यजगतो यस्याश्च स्थितिरप्ययः।
चक्षुरुन्मेषवत्तस्यै जह्नुजायै नमो नमः ॥ १० ॥

यादेवी विधृतिः सेतुः सर्वस्थाने नियच्छति।
असंभेदायवैतस्यै जह्नुजायै नमो नमः ॥ ११ ॥

मंगला मंगलानांया पावनानां च पावनी।
भुक्तिदा मुक्तिदा चास्यै जह्नुजायै नमो नमः ॥ १२ ॥

अंब ! त्वामाश्रयेबालः प्रसीदानुगृहाणमाम्।
पुनातु पादरजसा चैनमेनोनिधिजनम् ॥ १३ ॥

देहि मे वृत्तिनैश्चल्यं त्वत्पादसरसीरूहे।
विध्वंसय विजातीयांवृत्तिमत्यन्तदुर्भगाम् ॥ १४ ॥

अंब ! त्वं शरणं मम
त्रिपथगे ! बाह्यार्थचिन्ताकुलं
पादाग्रेप्रपतन्तमन्त-
विधुरे मां पाहि मोहार्णवात्।
वात्सल्यांबुनिधे ! सदैव
मनसो व्यायामभूमिर्मम
प्रत्यग्ब्रह्म तवास्तु नित्य-
मचलं नीरूपरूपं महत् ॥ १५ ॥

प्रातः सायं दिनमथनिशा माससंवत्सरौचे-
त्येवंकालः प्रचलतिचलत्यायुरत्युग्रवेगम्।
क्षुद्रान् भोगान् त्यजतु भजतु श्रीपदं प्रेमतोऽन्तः
स्वर्गंगायाः श्व इति मतिमान्मानवो मा ब्रवीतु ॥ १६ ॥

यावच्छ्रद्धा रतिस्तावत्त्वत्तत्वे संभवेन्नृणाम् ।
अत्यन्तावेशतोऽत्रैव नित्यशान्तिफलोदयः ॥ १७ ॥

पण्डितस्त्वां न जानाति श्रद्धावात् वेत्ति तत्त्वतः ।
ब्रंभ्रमीतिमनोज्ञस्य नोचेन्नतु स पण्डितः ॥ १८ ॥

शब्दानुमानविपिने विपुले भ्रमद्भि-
र्न प्राप्यतेंऽव तवतत्त्व मरं हि तद्धै ।
श्रद्धैधितान्तरवबोधबृहत्प्रदीप-
प्रद्योतनैकसुलभं धिषणागृहान्ते ॥ १९ ॥

अस्तीति भातीति भवत्प्रकाश-
मास्तिक्यबुद्ध्यांऽव करोमि साक्षात् ।
ततश्च सच्चित् सुखरूपिणि ! त्वा-
मभ्यर्थयेऽवेति भवांबुधेर्माम् ॥ २० ॥

गंगोत्तरीक्षेत्रविहारशीलां
गंगा मनंगारिशिरोविभूषाम् ।
सर्वात्मना त्वां प्रणतोऽस्मि नित्यं
सर्वात्मिकां त्वत्परताप्रसिद्ध्यै ॥ २१ ॥

प्रसीद गंगे ! भगवत्यभीक्ष्णं
त्वत्प्रेमयाचेऽन्यदहं न याचे ।
त्वदंबुधारावदखण्डरूपं
प्रसीद भूयोऽपि नमोंऽघ्रिपातैः ॥ २२ ॥

गंगोत्तरीक्षेत्र मनुत्तमं श्री-
गोत्राधिपोत्तुंग शिरोऽवतंसः ।
पुण्यं महत्पूज्यतमञ्च साक्षात्-
दुत्पत्तिभूरस्तिसुरापगायाः ॥ २३ ॥

तत्रांबिकापरमिदं निवसन्नकार्षं
स्तोत्रं महार्हमहमंबिकयानियुक्तः ।
तत्पादयोरुपहृतश्च तदस्तु तस्याः
प्रीत्यै च शुभ्रलघुमत्स्मितपोतकाय ॥ २४ ॥

गंगोत्तर्यामिह गिरि-
गुहावेश्मनि त्वत्पदान्ते
पाद्मपीठे स्थिरमृजु कदा
संस्थितः सन् सुखेन ।
न्यस्तस्वांतस्त्वयि शिव तनो !
देवि ! कस्तूरिकाणां
संघर्षाश्मायित मिद महं
विस्मरिष्यामि देहम् ॥ २५ ॥

इति पञ्चमः स्तबकः समाप्तः ।

* * *

